अपिच । श्रुतौ ब्रह्मोपायनस्य साम्योपायनहेतुत्वोक्त्या तदनुपायनस्य साम्यानुपायने हेतुत्वमिति ज्ञाप्यते । तथाच, पराभिध्यानात् तु तिरोहितं ततो ह्यस्य बन्धविपर्ययाविति सूत्रे जीवस्य ब्रह्मांशत्वेनानन्दैश्वर्यादिब्रह्मधर्मवत्त्वाद् ब्रह्मणः सकाशाद्विभागे सति तदिच्छया तद्धर्मतिरोधानस्य संसारित्वे हेतुत्वमुक्तं यत्तदपि तदुक्तमिसनेन स्मार्यत इति न विस्मर्त्तव्यम् । यथान्यशाखोक्तधर्मा

---

सारत्वसूत्रे संसारावस्थायामेव व्यपदेशपक्ष उच्यते, न तु मुक्त्यवस्थायाम् । यत्र त्वस्य सर्वमात्मैवाभूत्, सलिल एको द्रष्टाऽद्वितीयो भवतीत्यादिश्रुतिषु ब्रह्माभेदस्यैव श्रवणादिति वाच्यम् । अभेदेऽपि मुक्त्यवस्थायां जीवन्यूनतायाः यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति, एवं मुनेर्विजानत आत्मा भवति गौतमेति काठकश्रुतौ भेदसहिष्णोरभेदस्यैव निश्चायनात् । नच सलिल एक इत्यादिविरोधः । तत्र तादृशाभेदप्रतीत्यापि तदुपपत्तेः । लोकेऽपि मिलिताङ्गुल्यादौ विभागाभाव एव एकशब्दप्रयोगाच्च । नचावान्तरमुक्तावेवं भाव इति वाच्यम् । मानाभावात् । परमतेऽप्यविभागेन दृष्टत्वादिति सूत्रेऽविभागस्यैव व्याख्यातत्वात् । ब्रह्मसूत्रेषु मुक्तिविचारे कुत्राप्यैक्यपदादर्शनाच्च । नचैवमपि शङ्कापिशाची न निवर्त्तत इति चेत् । भिद्यते हृदयग्रन्थिरिति श्रुत्युक्तदर्शने एव निवर्त्स्यते इति किमतोऽधिकं वाच्यमिति दिक् । नच गतिसामान्यसूत्रभाष्यविरोधः । तत्रापि सामान्यपदस्य तुल्यपदेनैव व्याख्यानात् । सूत्रकारस्याप्येतदेव मतम् । अन्यथा तु गत्यैक्यादित्येव वदेत् । नच तद्विषयवाक्यविरोधः । तत्रापि विज्ञाता विज्ञातृरूपेण न तिष्ठति, किन्तु ब्रह्मरूपेणेति भेदविरुद्धसंपदा अभेदेन स्थानस्याभिप्रेतत्वादिति न कोऽपि चोद्यावकाशः । तदुक्तपदसूचितमर्थान्तरमाहुः * आपिचेत्यादि * । एतेन गुणहानिर्व्याख्याता बोध्या । नन्वेतद् व्याख्यानमसङ्गतम् । उपसंहारप्रकरणे धर्मसाम्यविचारप्रसङ्गस्याभावादित्यत आहुः * यथेत्यादि * यथा छान्दोग्यस्थपञ्चाग्निविद्यायां काण्वाद्युक्तः षष्ठोऽग्निः प्राणविद्यायां पञ्चमं रेतश्चोपसंह्रियते, विद्यैक्यबलात् तथात्र श्रुत्या

अप्येकस्यां विद्यायामुपसंह्रियन्त एवं ब्रह्मनिष्ठा धर्मा जीवेऽप्येतया श्रुत्या बोध्यन्त इत्येतावत्साम्यमस्तीत्युपसंहारप्रकरण एतस्य निरूपणं कृतम् ॥ २६ ॥

---

परमसाम्यनिरूपणादैक्यभ्रमेणासाधारणा ब्रह्मनिष्ठा धर्मा अपि जीवे उपसंहार्या इति शङ्कानिरासायैतदुक्तमित्यर्थः। तस्मान्निर्दोषत्वे तिरोहितगुणप्राप्त्या साम्ये च सिद्धे ब्रह्मभूतस्य मुख्यं भजनं सिद्ध्यतीति तदर्थे यतनीयं, न तु विभूतिपरेण भावितव्यमिति बोधितम् । अत्रापहतपाप्मत्वस्य यज्ञे प्राकट्याद्यक्षसम्बन्धे रुक्मवर्णत्वात् सौभाग्यस्य कर्तृत्वयोनित्वाभ्यां प्रपञ्चस्य च सम्बन्ध इति त्रिधा श्रीनिकेतत्वमुक्तम् ।

अन्ये तु इदमप्येकसूत्रमधिकरणमङ्गीकृत्य, अश्व इव रोमाणि विधूय पापं चन्द्र इव राहुमुखात् प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामीति ताण्डिश्रुतिं, तदा विद्वान्पुण्यपापे विधूयेत्याथर्वणश्रुतिं, तस्य पुत्रादायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यामिति शाट्यायनिश्रुतिं, तत्सुकृतदुष्कृते विधूनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्ति अप्रिया दुष्कृतमिति कौशीतकिश्रुतिं चोदाहृत्य, यत्रोभयं श्रूयते तत्र न कश्चिद्विचारो यत्राप्युपायनमेव श्रूयते न हानन्तत्राप्यर्थादेव हानं सन्निपतति अन्यैरुपेयमानयोरात्मीयसुकृतदुष्कृतयोर्हानस्यावश्यकत्वात्। यत्र पुनः केवलं हानमेव श्रूयते तत्रोपायनं सन्निपतेन्न वेति संशये, अश्रवणाद्विद्यान्तरगोचरत्वाच्च न सन्निपततीति पूर्वपक्षे तत्रापि तत्सन्निपातं सिद्धान्तयितुं सूत्रमेवं व्याकुर्वते । हानौ केवलायामपि श्रूयमाणायामुपायनं सन्निपतति । कौशीतकिरहस्ये हानशेषत्वेन समधिगतत्वादित्यादि ।

तच्चिन्त्यम् । आद्ये उपायनशब्दस्याभावेन अर्थग्रहणेऽपि तस्य फलबोधकत्वेन द्वितीयवाक्येऽपि तस्य तथात्वेन हानशेषत्वाभावाद्विषयत्वायोगात् । ताण्ड्याथर्वणकौशीतकिवाक्येषु कम्पनार्थकधातुनिष्पन्ने, धूत्वेत्यादिशब्दे हान्यर्थत्वं लक्षयित्वा उपायने तच्छेषताकल्पनस्य क्लिष्टत्वात् । चतुर्ष्वपि वाक्येषूपायनस्य सत्त्वात् क उपायनशब्दः सूत्रकाराभिसंहित इत्यनिश्चयेन कौशीतकिस्थशब्द-

## बनारससंस्कृतसीरीज़नाम्नी वाराणसेयसंस्कृतपुस्तकावली ।

इयं पुस्तकावली खण्डशो मुद्रिता भवति । अस्यां संस्कृतभाषानिबद्धा बहवः प्राचीना दुर्लभा उत्तमोत्तमाः केचिदङ्गलभाषानुवादसहिताश्च ग्रन्था मुद्रिता भवन्ति । तांश्च ग्रन्थान् काशिकराजकीयसंस्कृतपाठशालीयपण्डिता अन्ये ऽपि विद्वांसः शोधयन्ति । यैर्ग्राहकमहाशयैरियं पुस्तकावली नियमेनाविच्छेदेन संग्राह्या तैस्तदेकैकस्य खण्डस्य ।||) मूल्यं प्रापणव्ययश्च =) देयः । अन्यैर्महाशयैर्यैः कानिचित् खण्डानि संग्राह्याणि तैश्च प्रत्येकं खण्डानां १) मूल्यं प्रापणव्ययश्च =) देय इति ॥

### तत्र मुद्रिता ग्रन्थाः ।

| | | |
|---|---|---|
| सिद्धान्ततत्त्वविवेकः खण्डानि ५ | ५ | ० |
| अर्थसङ्ग्रह अंग्रेजीभाषानुवादसहितः | १ | ० |
| तन्त्रवार्त्तिकम् खण्डानि १३ | १३ | ० |
| कात्यायनमहर्षिप्रणीतं शुक्लयजुःप्रातिशाख्यम् सभाष्यं ख० ६ | ६ | ० |
| सांख्यकारिका चन्द्रिकाटीकागौडपादभाष्यसहिता | १ | ० |
| वाक्यपदीयम् खण्डानि ५ ( प्रथमभागः प्रथमद्वितीयकाण्डे पुण्यराजटीकासहित खण्ड ३ । द्वितीयभागः तृतीयाकाण्डम् हेलाराजटीकासहित खण्ड २ ) | ५ | ० |
| रसगङ्गाधरः खण्डानि ९ | ९ | ० |
| परिभाषावृत्तिः खण्डे २ | २ | ० |
| वैशेषिकदर्शनं किरणावलीटीकासंवलितप्रशस्तपादप्रणीतभाष्यसहितम् खण्डे २ | २ | ० |
| शिक्षासङ्ग्रहः खण्डानि ५ | ५ | ० |
| नैष्कर्म्यसिद्धिः खण्डानि ४ | ४ | ० |
| महर्षिकात्यायनप्रणीतं शुक्लयजुस्सर्वानुक्रमसूत्रम् सभाष्यम् | ३ | ० |
| ऋग्वेदीयशौनकप्रातिशाख्यं सभाष्यम् खण्डानि ४ | ४ | ० |
| (बृहत्) वैयाकरणभूषणम् पदार्थदीपिकासहितम् खण्डानि ४ | ४ | ० |
| विवरणोपन्यासः सटीकवाक्यसुधासहितः खण्डे २ | २ | ० |
| तत्त्वदीपनम् ( पञ्चपादिकाविवरणस्य व्याख्यानम् ) ख० ८ | ८ | ० |
| वेदान्तदीपः (श्रीभगवद्रामानुजाचार्यविरचितः) खण्डानि ३ | ३ | ० |
| टुप्टीका खण्डानि ४ | ४ | ० |

पातञ्जलदर्शनम्।श्रीरामानन्दयतिकृतमणिप्रभाऽऽख्यवृत्ति स०
व्याकरणमिताक्षरा । श्रीमदन्नंभट्टप्रणीता खण्डानि ९
रसमञ्जरी । व्यङ्ग्यार्थकौमुद्या प्रकाशेन च सहिता ख० ३
भेदधिक्कारः व्याख्यासहितः श्रीमदप्पयदीक्षितकृत उपक्रमपराक्रमसहितः खण्डे २
बोधसारो नरहरिकृतः तच्छिष्यदिवाकरकृतटीकया स० ख० १
ब्रह्मसूत्रदीपिका श्रीमच्छङ्करानन्दभगवद्भिर्विरचिता खण्डे २
दैवज्ञकामधेनुः अर्थात् प्राचीनज्योतिषग्रन्थः खण्डानि ३
श्रीमदणुभाष्यम् । श्रीश्रीवल्लभाचार्यविरचितम् ।
गोस्वामिश्रीपुरुषोत्तमजी महाराजविरचितभाष्यप्रकाशाख्य-व्याख्या समेतम् खण्डानि ११
तत्त्वशेखरः । श्रीभगवल्लोकाचार्यप्रणीतः । तथा—तत्त्वत्रयचुलुकसंग्रहः । कुमारवेदान्ताचार्यश्रीमद्वरदगुरुविरचितः ।
श्रीभाष्यवार्तिकम् । श्रीमद्रामानुजाचार्यविशिष्टाद्वैतसिद्धान्तप्रतिपादनपरम् ।

**व्रजभूषण दास और कम्पनी**
**चांदनीचौक के उत्तर नई सड़क बनारस**

